प्रकाशनम् -
संस्कृतभारती
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



१-१४ मुद्रणम् - ७७,०००
१५ मुद्रणम् - १०,०००

मूल्यं - रू. १०.००

मुद्रणम् -
प्रिन्टैक इन्टरनेशनल
बी-36, डी.एस.आई.डी.सी. कॉम्प्लैक्स
झिलमिल इंडस्ट्रियल एरिया, दिल्ली-95

ISBN 978-81-88220-37-X

**GEETA SAMSKRITAM** - A collection of Samskrit songs written by various authors.

Publisher - **SAMSKRITA BHARATI** - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085.
Ph : 26721052 / 26722576 E-mail: samskritam@gmail.com

Pages - 32 Price - Rs. 10-00 Fifteenth Print - April- 2013
**Printed at -- Printech International** B-36, D.S.I.D.C. Complex, Jhilmil Industrial Area, Delhi-95

# प्रस्तावना

*सम्भाषणं भाषानिष्ठम् । भाषा च भावसम्बद्धा । भावप्रकाशनं तु विविधैः मुखैः सम्भवति । तेषु गीतानि अपि अन्यतमानि । गीतानि न केवलं भावं प्रकाशयन्ति, अपि तु भावान् उद्दीपयन्ति अपि । तादृशानि गीतानि कानिचन अत्र सङ्गृहीतानि ।*

*भावप्रधानानि एतानिताललयोपेतानि । अत्रत्यानि प्रायः सर्वाणि अपि गीतानि प्रादेशिकच्छन्दांसि अनुकुर्वन्ति । देशभक्तिः संस्कृतमातृप्रीतिः इत्यादयः उदात्ताः विषयाः एतेषु उपात्ताः इति तु अस्य सङ्ग्रहस्य वैशिष्ट्यम् ।*

*एतेषां प्रकाशनार्थं ये अनुमतिं दत्तवन्तः तेभ्यः लेखकेभ्यः वयं कृतज्ञाः । 'गीतसंस्कृतम्' इति नाम्ना एव एतेषां गीतानां प्रथमप्रकाशनं तिरुपतिस्थया संस्कृतप्रचारपरिषदा कृतम् आसीत् । तत् पुनः मुद्रापयितुम् अनुमतिं दत्तवतीं तां परिषदं वयं कृतज्ञतापूर्वकं स्मरामः । मुद्रकाय तत्सहकारिभ्यः च हार्दाः धन्यवादाः ।*

*प्रमाथि सं।। अधिकज्येष्ठकृष्णद्वितीया — प्रकाशकः*
*१.६.१९९९*

## (पञ्चदशस्य मुद्रणस्य)

पञ्चदशं मुद्रणं यत् प्रचलति तत् महते सन्तोषाय। एतदवसरे सहकृतवद्भ्यः सर्वेभ्यः कृतज्ञताः समर्पयामः वयम्।

विजयसंवत्सरस्य चैत्रशुक्लनवमी (श्रीरामनवमी) — प्रकाशकः
*१९.०४.२०१३*

अनुक्रमणिका



# १. पठत संस्कृतम्

*रेवतिरागः* *आदितालः*

पठत संस्कृतम्, वदत संस्कृतम्
लसतु संस्कृतं चिरं गृहे गृहे च पुनरपि ।। पठत ।।

ज्ञानवैभवं वेदवाङ्मयं
लसति यत्र भवभयापहारि मुनिभिरार्जितम् ।
कीर्तिरार्जिता यस्य प्रणयनात्
व्यास-भास-कालिदास-बाण-मुख्यकविभिः ।। पठत ।।

स्थानमूर्जितं यस्य मन्वते
वाग्विचिन्तका हि वाक्षु यस्य वीक्ष्य मधुरताम् ।
यद्विना जना नैव जानते
भारतीयसंस्कृतिं सनातनाभिधां वराम् ।। पठत ।।

जयतु संस्कृतम्, संस्कृतिस्तथा
संस्कृतस्य संस्कृतेश्च प्रणयनाच्च मनुकुलम् ।
जयतु संस्कृतम्, जयतु मनुकुलम्
जयतु जयतु संस्कृतम्, जयतु जयतु मनुकुलम् ।। पठत ।।

– श्री मञ्जुनाथशर्मा

## २. लोकहितं मम करणीयम्

*हिन्दोलरागः* *आदितालः*

मनसा सततं स्मरणीयम्
वचसा सततं वदनीयम्
लोकहितं मम करणीयम् ॥ ॥ लोकहितं ॥

न भोगभवने रमणीयम्
न च सुखशयने शयनीयम् ।
अहर्निशं जागरणीयम्
लोकहितं मम करणीयम् ॥ ॥ मनसा ॥

न जातु दुःखं गणनीयम्
न च निजसौख्यं मननीयम् ।
कार्यक्षेत्रे त्वरणीयम्
लोकहितं मम करणीयम् ॥ ॥ मनसा ॥

दुःखसागरे तरणीयम्
कष्टपर्वते चरणीयम् ।
विपत्तिविपिने भ्रमणीयम्
लोकहितं मम करणीयम् ॥ ॥ मनसा ॥

गहनारण्ये घनान्धकारे
बन्धुजना ये स्थिता गह्वरे ।
तत्र मया सञ्चरणीयम्
लोकहितं मम करणीयम् ॥ मनसा ॥

**- डा॰ श्रीधर भास्कर वर्णेकर**



## ३. नैव क्लिष्टा न च कठिना

*यमनृकल्याणीरागः* *आदितालः*

सुरससुबोधा विश्वमनोज्ञा
ललिता हृद्या रमणीया ।
अमृतवाणी संस्कृतभाषा
नैव क्लिष्टा न च कठिना ॥ नैव क्लिष्टा ॥

कविकोकिल-वाल्मीकि-विरचिता
रामायणरमणीयकथा ।
अतीव-सरला मधुरमञ्जुला
नैव क्लिष्टा न च कठिना ॥ सुरस... ॥

व्यासविरचिता गणेशलिखिता
महाभारते पुण्यकथा ।
कौरव-पाण्डव-सङ्गरमथिता
नैव क्लिष्टा न च कठिना ॥ सुरस... ॥

कुरुक्षेत्र-समराङ्गण-गीता
विश्ववन्दिता भगवद्गीता ।
अमृतमधुरा कर्मदीपिका
नैव क्लिष्टा न च कठिना ॥ सुरस... ॥

कविकुलगुरु-नव-रसोन्मेषजा
ऋतु-रघु-कुमार-कविता ।
विक्रम-शाकुन्तल-मालविका
नैव क्लिष्टा न च कठिना ॥ सुरस... ॥

**- वसन्त गाडगीलः**

# ४. विस्मृतभेदाः सन्तः

*बेहाक्रागः* *चतुरस्रैकतालः*

विस्मृतभेदाः सन्तो
निर्मलभावापन्नाः
एकीभावं हृदयारूढं सततं कुर्वन्तुऽऽ
भो भोः, सततं कुर्वन्तुऽ ॥ ॥ विस्मृत... ॥

पूर्वज-मुनिजन-कविजन-वाञ्छा सर्वेषामैक्यं
सुखिनस्सर्वे सन्त्विति गानं तेषां बहुहृद्यम् ।
भाषा-धन-मत-जाति-विभेदः हृदये मा भवतु
दुःखित-दीन-जनानुन्नेतुं हस्ताः प्रसरन्तुऽऽ
भो भोः, हस्ताः प्रसरन्तुऽ ॥ ॥ विस्मृत... ॥

गङ्गा-तुङ्गा-कावेरी-जलमस्माकं मत्वा
कृतसङ्कल्पाः कार्यं कर्तुम् आलस्यं हित्वा ।
सुवर्णपुष्पां पृथिवीमेतां क्रष्टुम् आयान्तु
प्रवहतु कामं स्वेदस्रोतः धैर्यं मा जहतुऽऽ
भो भोः, धैर्यं मा जहतुऽ ॥ ॥ विस्मृत... ॥

घर्षण-लुण्ठन-वञ्चन-हननं प्रलयं संयातु
स्नेहस्रोतः प्रवहतु भ्रातुर्भावो हृदि लसतु ।
अनिलः सलिलम् अनलः सर्वं सर्वेषामेकम्
प्रवहति रक्तमभक्तं मातुः भेदो मा भवतुऽऽ
भो भोः, भेदो मा भवतुऽ ॥ ॥ विस्मृत... ॥

– श्री जि. महाबलेश्वरभट्टः



# ५. सुन्दरसुरभाषा

*शिवरञ्जनीरागः* *आदितालः*

मुनिवरविकसित-कविवरविलसित-
मञ्जुलमञ्जूषा, सुन्दरसुरभाषा ।
अयि मातस्तव पोषणक्षमता
मम वचनातीता, सुन्दरसुरभाषा ॥ मुनिवर... ॥

वेदव्यास-वाल्मीकि-मुनीनाम्
कालिदास-बाणादिकवीनाम् ।
पौराणिक-सामान्य-जनानाम्
जीवनस्य आशा, सुन्दरसुरभाषा ॥ मुनिवर... ॥

श्रुतिसुखनिनदे सकलप्रमोदे
स्मृतिहितवरदे सरसविनोदे ।
गति-मति-प्रेरक-काव्यविशारदे
तव संस्कृतिरेषा, सुन्दरसुरभाषा ॥ मुनिवर... ॥

नवरस-रुचिरालङ्कृति-धारा
वेदविषय-वेदान्त-विचारा ।
वैद्य-व्योम-शास्त्रादि-विहारा
विजयते धरायां, सुन्दरसुरभाषा ॥ मुनिवर... ॥

– श्री नारायणभट्टः

## ६. वयं हिन्दुसञ्जाताः सर्वे

*सिन्धुभैरवीरागः* *खण्डैकतालः*

वयं हिन्दुसञ्जाताः सर्वे, अस्माकं पुण्यम्
पावनराष्ट्रं, भावय श्रेष्ठम् ।। वयं हिन्दु... ।।

जननमपि दुर्लभमत्र
दैवमपि सिद्ध्यति यत्र ।
कर्मफलापेक्षाहीनाः
धर्मे निष्ठाः कर्ममुखेन ।। वयं हिन्दु... ।।

अस्मासु नास्ति च भेदः
अस्मासु नास्ति च वादः ।
भिन्नमतम् एकीकृत्य
सङ्गच्छेमहि संवदेमहि ।। वयं हिन्दु... ।।

मम जननी भारतमाता
पुत्रोऽहं सेवाकर्ता ।
एवमेव कृत्वा भावम्
सत्यं वदाम चराम धर्मम् ।। वयं हिन्दु... ।।

**– श्री नारायणभट्टः**

## ७. जयतात् संस्कृतवाणी मधुरा

*मोहनरागः* *आदितालः*

जयतात् संस्कृतवाणी मधुरा
भवतात् विश्वजनादरणीया
मञ्जुलभाषिणी,
चारुविलासिनी
कलरवरम्यधुनी ।। ।। जयतात् ।।

पावन-मुनिजन-कुञ्ज-विहारिणी
सुमनोमन्दिर-लास्य-विधायिनी
अनुपमसुन्दरी ललितकलावनी
वल्मीकभवादि-कवीन्द्रखनी
ज्ञानप्रदायिनी
रसिकविलासिनी
घनविपदुपशमनी ।। ।। जयतात् ।।

सत्य-शान्ति-शम-दमोपदेशिनी
धर्मकर्मसु धैर्यप्रचोदिनी
नीरसभुवने नवरसपूरिणी
सपदि जनानां तापनिवारिणी
कलिमलहारिणी
भवजलतारिणी
सरसिजभवरमणी ।। ।। जयतात् ।।

**– श्री गु. गणपय्यहोळ्ळः**

# ८. भारति मामव

*गौलरागः* *आदितालः*

प - भारति मामव भगवति भैरवि
भार्गवि शाम्भवि गौलाङ्कसुन्दरि ! ।। भारति ।।
अ - निरवधिसुखदायिके विद्यानायिके
निरतिशयानन्त-फलप्रदायिके । ।। भारति ।।
च - सरसिज-मृदुतम-समयुग-चरणे
सरसीरुहासने शरदिन्दुवदने
करधृत-वरवीणा-पुस्तक-कमले
सुरुचिर-मुक्ताहार-सुवलये ।। ।।भारति ।।

- **श्री ति.गो. अनन्तसुब्रह्मण्यम्**

# ९. सादरं समीहताम्

सादरं समीहताम् वन्दना विधीयताम्
श्रद्धया स्वमातृभू-समर्चना विधीयताम् ।।
आपदो भवन्तु वा, विद्युतो लसन्तु वा
आयुधानि भूरिशोऽपि मस्तके पतन्तु वा
धीरता न हीयतां, वीरता विधीयतां
निर्भयेन चेतसा पदं पुरो निधीयताम् ।। ।। सादरं ।।
प्राणदायिनी इयं त्राणदायिनी इयं
शक्तिमुक्तिभक्तिदा सुधाप्रदायिनी इयम्
एतदीयवन्दने सेवनेऽभिनन्दने
साभिमानमात्मनो जीवनं प्रदीयताम् ।। ।। सादरं ।।

- **श्री वासुदेव द्विवेदी शास्त्री**



# १०. स जयति जगति सनातनधर्मः

*मोहनरागः* *आदितालः*

स जयति जगति सनातनधर्मः
सत्यमिदं सत्यम् ।।
उपदेशः खलु यस्य मनोज्ञः
नित्यनवीनोऽयम्ऽऽ ।। ।। सत्यमिदं सत्यम् ।।

निर्मलभक्त्या कर्मविशुद्धं
कुरुताविरतं फलमविचिन्त्य ।
अयमिह धर्मः रक्षत धर्मं
रक्षति धर्मो हिऽऽ ।। सत्यमिदं.... ।।

अर्चत विष्णुं शङ्करमथवा
जिनमाचार्यं बुद्धमथान्यम् ।
एको देवो नाम विभिन्नं
नास्ति विवादोऽत्रऽऽ ।। सत्यमिदं.... ।।

अयमिह स्पृश्यः अयमस्पृश्यः
उच्चो ह्येकः नीचोऽप्यपरः ।
एवंरूपः भिन्नो भावः
कल्पित एवायम्ऽऽ ।। सत्यमिदं.... ।।

भूतलमेकं यत्र निवासः
कुलमप्येकं मनुकुलजानाम् ।
तस्मात्सर्वे भ्रातर यूयं
मा विस्मरतेदम्ऽऽ ।। सत्यमिदं.... ।।

जातिरभिन्ना नीतिरभिन्ना
लक्ष्यमभिन्नं कार्यमभिन्नम् ।
तस्मात्सर्वे सङ्गच्छध्वं
सङ्घे शक्तिरिहऽऽ ।। सत्यमिदं.... ।।

द्वेषं त्यक्त्वा भेदं हित्वा
लक्ष्यं सततं चेतसि कृत्वा ।
क्रियते कार्यं यदि युष्माभिः
भविता सिद्धिरिहऽऽ ।। सत्यमिदं.... ।।

धैर्ये रक्तिः कर्मणि सक्तिः
दैवे भक्तिः पापविरक्तिः ।
सर्वेषामपि भवभयतरणे
एषा युक्तिरिहऽऽ ।। सत्यमिदं.... ।।

मनसा सततं ध्यायत भद्रं
वचसा सततं निगदत भद्रम् ।
कृत्या सततं कुरुत च भद्रं
भवति हि वो भद्रंऽऽ ।। सत्यमिदं.... ।।

**- श्री मञ्जुनाथशर्मा**



## ११. मृदपि च चन्दनम्

मृदपि च चन्दनमस्मिन् देशे ग्रामो ग्रामः सिद्धवनम् ।
यत्र च बाला देवीस्वरूपा बालाः सर्वे श्रीरामाः ।।

हरिमन्दिरमिदमखिलशरीरम्
धनशक्ती जनसेवायै
यत्र च क्रीडायै वनराजः
धेनुर्माता परमशिवा ।।
नित्यं प्रातः शिवगुणगानं
दीपनुतिः खलु शत्रुपरा ।। ।। मृदपि ।।

भाग्यविधायि निजार्जितकर्म
यत्र श्रमः श्रियमर्जयति ।
त्यागधनानां तपोनिधीनां
गाथां गायति कविवाणी
गङ्गाजलमिव नित्यनिर्मलं
ज्ञानं शंसति यतिवाणी ।। ।। मृदपि ।।

यत्र हि नैव स्वदेहविमोहः
युद्धरतानां वीराणाम् ।
यत्र हि कृषकः कार्यरतः सन्
पश्यति जीवनसाफल्यम्
जीवनलक्ष्यं न हि धनपदवी
यत्र च परशिवपदसेवा ।। ।। मृदपि ।।

**- श्री जनार्दन हेगडे**

# १२. हिमगिरेः शृङ्गम्

हिमगिरेः शृङ्गम्, देवनदीं गङ्गाम्
मनसि निधाय हि अनुभवामः
अनुपममुत्तुङ्गं भावम्, अनुपममुत्तुङ्गम् ।।

दिव्य-सनातन-संस्कृतिः
यतो हि वेदपुराणानि ।
हिन्दोरुन्नत्यवनत्योः
सदृशानिऽ गिरिशिखराणि ।
भीरुमनस्स्वपि धीरस्वभावं
जनयेयुर्हिमभवनानि ।। हिमगिरेः ।।

तं सुरलोकमतिक्रम्य
अवतीर्णा या भागीरथी ।
भारतमातुः सङ्गेन
पुण्या जाता भाग्यवती ।
हिन्दूदेशे प्रतिजनमनसः
पावनकारिणी पुण्यवती ।। हिमगिरेः ।।

पराजयोऽपि सोपानं
धैर्यं विजयस्य निदानम्
गच्छतु दुःखित-बन्धुभ्यो
वक्तुं धैर्य-समाधानम् ।
मातुः गौरवपरिरक्षायै
निष्ठं तनुहृद्धनप्राणम् ।। हिमगिरेः ।।

– श्री नारायणभट्टः



# १३. चिरनवीना संस्कृता एषा

चिरनवीना संस्कृता एषा, गीर्वाणभाषा
चिरनवीना संस्कृता एषा ।।

महतो भूतस्य निःश्वसितम्
अस्ति यस्याम्, अतिपुरातन-वेदसाहित्यम्
शास्त्रपूरैः स्मृतिविचारैः
वरकवीनां काव्यसारैः
चित्रिता मञ्जुला मञ्जूषा, मञ्जुला भाषा ।। चिरनवीना ।।

वाल्मीकि-व्यास-मुनिरचितं,
रामायणं महाकाव्यं महाभारतं
क्लैब्यकिल्बिष-कलित-पार्थं
कार्यविषये योजयन्ती
अस्ति यस्यां भगवती गीता, भगवता कथिता ।। चिरनवीना ।।

मातृभाषा मातृभाषाणाम्, भवितुमर्हा
राष्ट्रभाषा भारतीयानाम्,
भवतु भाषाद्वेषनाशः
सर्वथा उद्घोषयामः
भारतीया भारती एषा, अनुपमा सरसा ।। चिरनवीना ।।

– श्री नारायणभट्टः

# १४. भारतधरणीयं मामकजननीयम्

*आभेरीरागः* *आदितालः*

भुवमवतीर्णा नाकस्पर्धिनी
भारतधरणीयं, मामकजननीयम् ।।

शिरसि हिमालय-मुकुट-विराजिता
पादे जलधिजलेन परिप्लुता
मध्ये गङ्गापरिसरपूता
भारतधरणीयं, मामकजननीयम् ।। ।। भुवमवतीर्णा ।।

काश्मीरेषु च वर्षति तुहिनम्
राजस्थाने प्रदहति पुलिनम्
मलयस्थाने वाति सुपवनः
भारतधरणीयं, मामकजननीयम् ।। ।। भुवमवतीर्णा ।।

नानाभाषि-जनाश्रय-दात्री
विविध-मतानां पोषणकर्त्री
नानातीर्थ-क्षेत्रसवित्री
भारतधरणीयं, मामकजननीयम् ।। ।। भुवमवतीर्णा ।।

पुण्यवतामियमेव हि नाकः
पुण्यजनानां रुद्रपिनाकः
पुण्यपराणामाश्रयलोकः
भारतधरणीयं, मामकजननीयम् ।। ।। भुवमवतीर्णा ।।

– श्री जि. महाबलेश्वरभट्टः



# १५. देववाणीनमनम्

नमो नमोऽम्ब देववाणि देवि कामपूरणि
नमो नमोऽम्ब पाहि मां पुनीहि कामरूपिणि ।।

यागधूमपाविते तपोवने निनादिनि !
पावनापगा-प्रवाह-मञ्जुनाद-योगिनि !
योगधूतपाप्मनां मुखेऽमले विलासिनि !
भोगसुन्दरापवर्ग-दायिनि, सनातनि ! ।। नमो ।।

चारुशब्द-सुन्दरास्य-वल्गुलास्य-मोहिनि !
व्यास-वाल्मीकि-कालिदास-भास-वासिनि !
भाव-भव्य-वाग्विलास-रङ्गमञ्चरूपिणि !
रम्यगीत-नृत्यनाट्य-मेलनेन शोभिनि ! ।। नमो ।।

तर्क-शब्द-शास्त्रचित्र-वाग्विनोद-रञ्जिनि !
ब्रह्मकर्मचिन्तया निगूढतत्त्वदर्शिनि !
वेदलोक-शब्दसम्पदूर्जिते मनोन्मनि !
भारतीयसंस्कृतेरुदारसारवाहिनि ! ।। नमो ।।

– श्री हयवदनपुराणिकः

# १६. कुरुध्वमद्य सज्जताम्

कुरुध्वमद्य सज्जतां रणाय भोः सशस्त्रताम्
प्रयात राष्ट्रसैनिकाः प्रयात राष्ट्रसैनिकाः ।।
समिद्ध एष सङ्गरः प्रयान्ति सैनिका रणम्
समेत्य कुर्महे वयं रिपूंश्च धूलिसात् क्षणम् ।
संहताश्च सञ्जाताःऽऽ युध्येमहि युध्येमहि
प्रयात रेऽ, अभियात रेऽ, प्रयात राष्ट्रसैनिकाः ।। कुरुध्वम् ।।

मरुत्सुताः प्रकुर्महे स्वमुष्टिसाद् दिवाकरम्
अगस्त्यवत्पिबेम छुल्लुकीकृतं च सागरम् ।
बाला ह्यभिमन्यवःऽऽ क्षणाज्जयेम चान्तकम्
प्रयात रेऽ, अभियात रेऽ, प्रयात राष्ट्रसैनिकाः ।। कुरुध्वम् ।।

चन्द्रगुप्तमद्य संस्मरेम भीमविक्रमम्
धमनिसञ्चितं वितन्महे च शिवपराक्रमम् ।
महापरम्परामिमां च कुर्महि त्वखण्डिताम्
प्रयात रेऽ, अभियात रेऽ, प्रयात राष्ट्रसैनिकाः ।। कुरुध्वम् ।।

अग्निकुण्डमत्र चण्डताण्डवं समन्ततः
निहत्य शक्तिमासुरीं विदध्महे तदाहुतिम् ।
वंश एष विख्यातो मार्ग एष नो महान्
प्रयात रेऽ, अभियात रेऽ, प्रयात राष्ट्रसैनिकाः ।। कुरुध्वम् ।।

**– डा० श्रीकान्त बहुलकरः, श्री वामनराव् अभ्यङ्कर च**



# १७. धीवरगानम्

नायकः – आयाहि रेऽऽ ! आयाहि रेऽऽ ! आयाहि रेऽऽ !
विहायसि सराग-रश्मि-चन्द्रमाः
तनोति सान्द्र-रोचि-मञ्जु-चन्द्रिकाः
सिन्धुरावघोषिताः रोदसीकन्दराः
यान्तु यानपात्रचालकाः सधीवराः ।। आयाहि ।।
अनुयायिनः – याहि रे ! याहि रे ! याहि रे ! याहि रे !
याऽऽहि ।।

नायकः – चन्द्रहासमज्जिता तामसी प्रिया
सर्व-देह-कान्ति-पुञ्ज-मञ्जु-वल्गना ।
निश्चला विभासते तारलोचना
यान्तु यानपात्रचालकाः सधीवराः ।। आयाहि ।।
अनुयायिनः – याहि रे ! याहि रे ! याहि रे ! याहि रे !
याऽऽहि ।।

नायकः – सागरेण चुम्बिता चन्द्रिका मुदा
राजते विलास-हास-लास्य-चित्रिता
रागिणीव भासते रागरञ्जिता
यान्तु यानपात्रचालकाः सधीवराः ।। आयाहि ।।
अनुयायिनः – याहि रे ! याहि रे ! याहि रे ! याहि रे !
याऽऽहि ।।

**– श्री परीक्षित् शर्मा**

# १८. संस्कृतेन सम्भाषणं कुरु

संस्कृतेन सम्भाषणं कुरुऽऽ, जीवनस्य परिवर्तनं कुरु
यत्र यत्र गच्छसि पश्य तत्र संस्कृतं
संस्कृतेः संरक्षणं कुरुऽऽ ।। संस्कृतेन ।।

जीवनस्य लक्ष्यमस्ति किम् ?
जीवनस्य लक्ष्यमेव संस्कृतस्य वर्धनम् ।
स्फूर्तिरस्ति, तत्र प्रीतिरस्ति
स्फूर्तिरस्ति, प्रीतिरस्ति संस्कृतस्य वर्धने
जिजीविषाम संस्कृताय रक्षयाम संस्कृतिं
समर्पयाम संस्कृताय जीवनम्ऽऽ ।। संस्कृतेन ।।

जागृयाम वयं प्रेरयाम
जागृयाम प्रेरयाम सर्वहिन्दुसोदरान्
सम्पिबाम वयं पाययाम
सम्पिबाम पाययाम संस्कृतामृतं सदा ।
देशहितचिन्तनं विना यस्य जीवनम्
व्यर्थमेव तस्य गर्ह्यजीवनम्ऽऽ ।। संस्कृतेन ।।

ऐक्यमस्तु अचलबुद्धिरस्तु
ऐक्यमस्तु अचलतास्तु संस्कृताभिमानिनाम् ।
धीरतास्तु नैव भीतिरस्तु
धीरतास्त्वभीतिरस्तु मास्तु उदासीनता
मातृभूमिसेवनं दीनदलितरक्षणं
संस्कृतप्रचार एव जीवनम्ऽऽ ।। संस्कृतेन ।।

**– श्री वेङ्कटरमणमुच्चिन्नायः**



# १९. विलसतु सा मे रसनाग्रे

विलसतु सा मे रसनाग्रे
निवसतु सा मे हृदयाब्जे ।।
या वै वाणी ध्यानावस्थित-
मुनिसाक्षात्कृत-वेदमयी ।
या च पराशरमुनिमनुमुख्य-
स्मृतिविस्तारित-धर्ममयी ।। विलसतु ।।
या वै वाणी वल्मीकोद्भव-
मुनिकृत-रघुवर-चरितमयी ।
या वा वेदव्यासमुखोदित-
पञ्चमवेदपुराणमयी । ।। विलसतु ।।
या वै जैमिनि-कपिल-पतञ्जलि-
गौतमादिकृत-शास्त्रमयी ।
या वा वेदान्तप्रतिपादित-
मोक्षप्रदायक-तत्त्वमयी । ।। विलसतु ।।
या वै वाणी भारवि-बाण-
प्रमुख-कवीश्वर-काव्यमयी ।
या वै रूपक-चम्पू-मुक्तक-
पुण्यद-विविध-स्तोत्रमयी । ।। विलसतु ।।
या खलु भारत-भूप्रादेशिक-
भाषानिवह-प्राणमयी ।
कोट्यनुकोटिषु भाषास्वपि या
केवलमेका देवमयी । ।। विलसतु ।।

**– श्री मञ्जुनाथशर्मा**

## २०. प्रवहतात् संस्कृतमन्दाकिनी

शतशतकोटिशिरत्पर्यन्तं
प्रवहताऽत् संस्कृतमन्दाकिनी ।।

सिन्धु-सुतुद्रीसरस्वतीनां
तटे ऋषीणां ध्यानपराणाम् ।
होमधूम-पावित-लोकानाम्
अत्रिभृगूणां छन्दोवाणी ।। प्रवहतात् ।।

वाल्मीकिमुनि-व्यासविरचिता
रामकृष्णयोः पावनगाथा ।
अखण्डदीपो भगवद्गीता
कर्मयोग-सन्देश-दायिनी ।। ।। प्रवहतात् ।।

इयमस्माकं धर्मभारती
राष्ट्रैक्यस्य च महती स्फूर्तिः
विना संस्कृतं नैव संस्कृतिः
इह परत्र कल्याणकारिणी ।। ।। प्रवहतात् ।।



## २१. केशवं स्मरामि सदा

हिन्दुराष्ट्रसङ्घटकं सुजनवन्दनीयं
केशवं स्मरामि सदा परमपूजनीयम् ।।

राष्ट्रमिदं हिन्दूनां खलु सनातनम्
विघटनया जातं चिरदास्यभाजनम्
दुःखदैन्यपीडितमिति पीडितहृदयम् ।। ।। केशवं ।।

भगवद्ध्वज एव राष्ट्रगुरुरयं महान्
देशोऽयं खलु देवो जगति महीयान्
बोधयन्तमिति तत्त्वं सततस्मरणीयम् ।।।। केशवं ।।

वीरव्रतमेव परं धर्मनिदानम्
सुशीलमेव लोकेऽस्मिन् परमनिधानम्
उपदिशन्तमिति सारं दृढमाचरणीयम् ।। ।। केशवं ।।

नेतुं निजराष्ट्रमिदं परमवैभवं
नयत विलयमन्तर्गतसकलभेदभावम् ।
सङ्घमन्त्रमिति जपन्तमेकमेषणीयम् ।। ।। केशवं ।।

# २२. जय जय भारतदेश

जय जय भारतदेश जय त्वं जय जय भारतदेश ।
नत्वा रुद्रं कैलासेशं ताण्डवकर्तारं
ध्यात्वा रामं धनुर्धारिणं रावणहन्तारं
स्मृत्वा कृष्णं चक्रधारिणं कंसच्छेत्तारं
प्रणम्य सर्वान् पराक्रमध्वं, घोषयध्वम्, घोषयध्वम् ।। जय ।।

जयतु हनूमान् लङ्कादग्धा द्रोणाचलधारी
जयतु प्रतापो राणावीरो गिरिकन्दरवासी
जयतु शिवाजी, झान्सीलक्ष्मीः देवी रणचण्डी
प्रणम्य सर्वान् पराक्रमध्वं, घोषयध्वम्, घोषयध्वम् ।। जय ।।

गङ्गा-यमुना-ब्रह्मपुत्रनद-गण्डक-पावनवारि
कृष्णा-गोदा-सिन्धु-नर्मदाः तां सरयूं कावेरीं
सह्य-सप्तपुट-विन्ध्य-हिमाचलम् उन्नतशृङ्गसुशोभं
प्रणम्य सर्वान् पराक्रमध्वं, घोषयध्वम्, घोषयध्वम् ।। जय ।।



# २३. सुरसरस्वती

जयिनी भव सुरवाणि
स्तवनं तव करवाणि
शरणं त्वा करवाणि
जगति भव त्वं शुभवाणी ।। ।। जयिनी ।।

श्रुतिसुखनिनदे शिवदे
कविवर-विलसित-वरदे
सर्वाङ्गे च्युतिविधुरे
नवरसकलिते मधुरे
कामदुघा, त्वं ज्ञानसुधा ।। ।। जयिनी ।।

धरसि सनातनधर्मम्
जनयसि भाषाजालम्
वर्षसि गीतामृतधाराम्
वदसि सदा श्रुतिमखिलाम्
ह्लादयुता, त्वं वृद्धिमिता ।। ।। जयिनी ।।

– श्री गणपय्यहोळ्ळः

## २४. मम माता देवता

मम माता देवता ।
मम माता देवता ।।

अतिसरला, मयि मृदुला
गृह कुशला, सा अतुला ।। मम माता ।।

पाययति दुग्धं, भोजयति भक्तं
लालयति नित्यं, तोषयति चित्तम् ।। मम माता ।।

सायङ्काले नीराजयति
पाठयति च मां शुभङ्करोति
श्लो ।। *शुभं कुरु त्वं कल्याणम्*
*आरोग्यं धनसम्पदः ।*
*दुष्टबुद्धिविनाशाय*
*दीपज्योतिर्नमोऽस्तु ते ।।*

पाठयति च मां शुभङ्करोति ।। ।। मम माता ।।

रात्रौ अङ्के मां स्वापयति
मधु मधु मधुरं गीतं गायति
आ आ आ आ आऽऽ ।। मम माता ।।

**- श्री ल.म. चक्रदेवः**



## २५. भूमिरियं बलिदानस्य

एत बालकाः दर्शयामि वस्तेजो हिन्दुस्थानस्य,
तेजो भारतवर्षस्य ।
अस्य मृत्तिका शिरसा वन्द्या, भूमिरियं बलिदानस्य ।
वन्दे मातरं, वन्दे मातरम् ।।

उत्तरभागे रक्षणकर्ता नगाधिराजो विख्यातः
दक्षिणदेशे पदक्षालको महासागरः प्रख्यातः ।
पश्यत गङ्गायमुनातीरं परं पावनं भूलोके
स्थाने स्थाने यद् दिव्यत्वं नैव सुराणामपि नाके
एकमेव तत् स्थानं चैतत् देवानामवतारस्य ।। अस्य ।।

रजपूतानामेतत् स्थानं खड्गे येषाम् अभिमानः
धर्मरक्षणे युद्धे मरणं यैर्मन्यते सम्मानः ।
अत्रैवासीत् प्रतापवीरो विश्वेऽस्मिन् यो बहुमान्यः
शीलरक्षणे भस्मीभूताः अत्रासङ्ख्याः पद्मिन्यः
रजः सुपूतं वीरपदाब्जैः स्थानं चैतद्देशस्य ।। अस्य ।।

वङ्गोऽयं यद्धरणीहरिता मनोहारिणी सर्वत्र
निजराष्ट्रार्थं सिद्धा मरणे सन्ति बालका अप्यत्र
रामकृष्ण-गौराङ्ग-विवेकानन्द-प्रमुखाः यत्रासन् ।
अरविन्दाद्याः क्रान्तिकारकाः शान्तिपूजकाः यत्रासन्
जन्मभूरियं 'नेताजेः' प्रख्यातस्य सुभाषस्य ।। अस्य ।।

इयं दृश्यतां महाराष्ट्रभूः यत्र शिवाजी राजासीत्
यस्य भवानीकरवालेन म्लेच्छानां संहारोऽभूत्
स्थाने स्थाने पर्वतभागे सामर्थ्याग्निः प्रकटोऽभूत्
घोषो 'हर हर महादेव' इति बाले बाले प्राविरभूत्
कृतं हि गौरवरक्षणकार्यं शिवेन हिन्दुस्थानस्य ।। अस्य ।।

भक्तिमानयं दक्षिणदेशो गोदाकृष्णापरिपुष्टः
गगनस्पर्धित-शिल्पकलान्वित-गोपुरभालैर्विभूषितः ।
अत्र विद्यते सुजनस्थानं सीतापति-पदपरिपूतम् ।
अत्र शङ्कराचार्याः वन्द्याः केरलभागे सम्भूताः
विजयनगर-साम्राज्यमिहासीत् ख्यातं हिन्दूधर्मस्य ।। अस्य ।।

## २६. देशगीतिका

गुणगणमण्डित-यदुवरलसिता, राजति भारतमाता ।
नीतिबोधकपरात्परगीता, बोधकयोगिजनाप्ता ।। गुण... ।।

रम्यसुरालय-सरिदाक्रीडैः, भव्यसुललितनिजाङ्गा ।
अभिमतसिद्धा धन्या
शुभफलवृद्धिसुमान्या, जीयाद् भारतशोभा ।। गुण... ।।

अनुदिन-मङ्गलदायक-दयया, भारतमाता जयतात् ।
जयतात्, जयतात्, जयतात्
निजजनगणमवतात्, भारतमाता जयतात् ।। गुण... ।।

- श्री सीतारामाचार्यः



## २७. कृत्वा नवदृढसङ्कल्पम्

कृत्वा नवदृढसङ्कल्पम्
वितरन्तो नवसन्देशम्
घटयामो नव सङ्घटनम्
रचयामो नवमितिहासम् ।।

नवमन्वन्तरशिल्पिनः
राष्ट्रसमुन्नतिकाङ्क्षिणः
त्यागधनाः कार्यैकरताः
कृतिनिपुणाः वयमविषण्णाः ।। ।। कृत्वा ।।

भेदभावनां निरासयन्तः
दीनदरिद्रान् समुद्धरन्तः
दुःखवितप्तान् समाश्वसन्तः
कृतसङ्कल्पान् सदा स्मरन्तः ।। ।। कृत्वा ।।

प्रगतिपथान्नहि विचलेम
परम्परां संरक्षेम
समोत्साहिनो निरुद्वेगिनो
नित्यनिरन्तरगतिशीलाः ।। ।। कृत्वा ।।

- श्री जनार्दन हेगडे

## २८. ध्येयपथिक साधकऽऽ

ध्येयपथिकसाधकऽऽ
कार्यपथे साधयऽऽ
मृदु हसन् मधुकिरन् मातरं सदा स्मरन् ।।

जीवनं न शाश्वतं, वैभवं न हि स्थिरम्
स्वार्थलेपनं विना, यत्कृतं हि तच्चिरम्
सरलता स्वजीवनेऽऽ
चिन्तने सदोच्चताऽऽ
समाजपोषिता वयं समाजपोषकाश्चिरम् ।।
।। ध्येयपथिक ।।

यच्च मनसि चिन्त्यते, यच्च कीर्त्यते गिरा
तच्च मूर्तरूपताम्, एति नित्यजीवने
जनन्यनन्यचरणयोःऽऽ
समर्पितस्वजीवनाःऽऽ
ध्येयसाधनव्रता वयं भवेम सङ्गताः ।।
।। ध्येयपथिक ।।

स्मरत्विहाग्रजन्मनां, त्यागबलिसमर्पणम्
सिंहकुलसमुद्भवाः सिंहविक्रमा वयम्
सन्तु कष्टकोटयोऽऽ
भवतु विघ्नवर्षणंऽऽ
सकृत्प्रतिज्ञका वयं भजेम नो पलायनम् ।।
।। ध्येयपथिक ।।

– श्री जनार्दन हेगडे

## एतानि भवेयुः भवतां लाभाय



### गीतपुस्तकानि

- गीतसंस्कृतम्
- गेयसंस्कृतम्
- शिशुसंस्कृतम्

### ध्वनिमुद्रिकाः

- सम्भाषणसंस्कृतम्
- गीतसंस्कृतम्
- शिशुसंस्कृतम्
- हितोपदेशकथाः
- प्रयोगः
- श्रीकृष्णजननम्
- संस्कृतोज्जीवनम्
- गेयसंस्कृतम्
- अमरकोषः (समग्रः)

### सान्द्रमुद्रिकाः (C.D.Rom)

- भाषिका
- बालरञ्जिनी
- गीतसंस्कृतम्
- बालकेन्द्रम्
- संवादमाला

### अध्ययनपुस्तकमाला

- गीतासोपानम् - १
- गीतासोपानम् - २
- गीताप्रवेशः - १
- गीताप्रवेशः - २ (खण्डद्वयात्मकः)

ISBN 978-81-88220-37-X

रू. १०/-